**वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ॥**
**वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १२३ ॥**

वेदान्तानामर्थं ब्रह्म गच्छत्यवगच्छतीति वेदान्तगः । किं जपन्मुच्यते जन्तुर्जन्मसंसारबंधनादिति वचनात् जपकर्मणा साक्षान्मुक्तिशंकायां कर्मणां साक्षान्मोक्षहेतुत्वं नास्ति ज्ञानेनैव मोक्ष इति दर्शयितुं वेदान्तगो ब्राह्मणः स्यादित्युक्तम् । कर्मणां त्वंतःकरणशुद्धिद्वारेण मोक्षहेतुत्वम् । " कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते । नित्यं ज्ञानं समासाद्य नरो बंधात्प्रमुच्यते । धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥ योगिनः कर्म कुर्वन्ति संगं त्यक्त्वाऽऽत्मशुद्धये कर्मणा बध्यते जंतुर्विद्ययैव विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्" इति मानवं वचनम् । "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते " इति । " ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतले प्रख्ये पश्यत्यात्मानमात्मनि " इत्यादि स्मृतिभ्यश्च । " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " " येन केनचिद्यजतापि यज्ञेनापि दर्विहोमेनानुपहतमना एव भवति " इत्यादिस्मृतिभ्यः ज्ञानादेव मोक्षः । "ब्रह्मविदाप्नोति परं' तरति शोकमात्मवित् " ब्रह्मविद्ब्रह्मैव भवति " "ब्रह्मैव सन्ब्रह्माप्येति" " तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति " " विद्वान्न बिभेति कुतश्चन" "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" " यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति " " न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः " " वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे" इत्यादिश्रुतिभ्यः।शूद्रः सुखमवाप्नुयादिति श्रवणेनैव न तु जपयज्ञेन। "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इति श्रुतेः। 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः' इत्यादिना महाभारतादिश्रवणमनुज्ञायते।'सुगतिमियाच्छ्रवणाच्च शूद्रयोनिरिति हरिवंशे।यच्च शूद्रः शृणुयात्स सुखमवाप्नुयादिति व्यवहितेन संबंधः त्रैवर्णिकन्कीर्तयेदित्यंतेन

**धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्**
**कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाम् ॥ १२४ ॥**

चक्षुरादीनामात्मयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वनुरूपतः प्रवृत्तिः कामः । प्रजायत इति प्रजा संततिः ॥१२४ ॥

**भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः । सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ २५ ॥ यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च । अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥१२६॥ न भयं क्वचिदाप्नोति वीर्यं तेजश्च विंदति । भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ १२७ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बंधनात् । भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ १२८ ॥ दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् । स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९ ॥ वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः । सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥१३०॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित् । जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ १३१ ॥**

भक्तिमानित्यादिना भक्तिमतः शुचेः सततमुद्युक्तस्यैकाग्रचित्तस्य श्रद्धालोर्विशिष्टफलाधिकारिणः फलविशेषं दर्शयति ॥ १२५–१३१ ॥

**इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।**
**युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३२ ॥**

श्रद्धा आस्तिक्यबुद्धिः । भक्तिर्भजनतात्पर्यम् । आत्मनः सुखं आत्मसुखं तेन च क्षान्त्यादिभिश्च युज्यते ॥ १३२ ॥

**न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।**
**भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३ ॥**

न च क्रोधो न मात्सर्यं न लोभो नाशुभा मतिरिति अकारानुबंधरहितेन नकारेण समस्तपदत्रयं, क्रोधादयो न भवन्ति मात्सर्यं च न भवतीत्यर्थः ॥

**द्यौः सचंद्रार्कनक्षत्रा खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१३४॥ ससुरासुरगंधर्वं सयक्षोरगराक्षसम् । जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१३५॥ इंद्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥**

द्यौः सचंद्रार्कनक्षत्रेत्यादिना स्तुत्यस्य वासुदेवस्य माहात्म्यकथनेनोक्तानां फलानां प्रातिवचनं यथार्थकथनं नार्थवाद इति दर्शयाति ॥

**सर्वागमानामाचारः प्रथमं परिकल्प्यते । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१३७॥ ऋषयः पितरो देवा महाभूतानि धातवः। जंगमाजंगमं चेदं जगन्नारायणोद्भवम् ॥ १३८ ॥ योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च । वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १३९ ॥ एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रींल्लोकान्व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः ॥ १४० ॥**

'सर्वागमानामाचारः प्रथमं परिकल्प्यते । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः' इत्यनेनावान्तरवाक्येन सर्वधर्माणामाचरवत एवाधिकार इति दर्शयाति

**इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।**
**पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१ ॥**
**विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।**
**भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १४२ ॥**

**॥ इति विष्णुनामसहस्रस्तोत्रम् ॥**

इमं स्तवमित्यादि नामसहस्रशाखाज्ञेन सर्वज्ञेन भगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति सर्वैरर्थिभिः सादरं पठितव्यं सर्वफलसिद्ध्य इति दर्शयाति विश्वेश्वरमित्यादिना । विश्वेश्वरोपासनादेव स्तोतारस्ते धन्याः कृतार्थाः कृतकृत्या इति । " आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बंधनात्" इति व्यासवचनम् । प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः सहस्रनामसंबंधिव्याख्या सर्वसुखावहा । श्रुतिस्मृतिन्यायमूला रचिता हरिपादयोः । इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीशंकराचार्यविरचितं विष्णोर्नामसहस्रभाष्यं समाप्तम् ॥

इत्येवं श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवद्विरचितग्रंथसंग्रहस्य पूर्वमुद्रितभिन्नपुस्तकावेक्षणयुतं संशोधनं आरंभादासमाप्ति मुद्रणकार्यपरीक्षणं प्रकाशनं च दशाब्दमितेन कालेन भागवतोपनामधारिणं रघुनाथसूनुं हरिशर्माणं महाराष्ट्रदेशस्य पश्चिमविभागांतर्गते पुण्यपत्तननाम्नि नगरे वसन्तं चित्तपावनब्राह्मणं गार्ग्यगोत्रोत्पन्नं निमित्तीकृत्य श्रीमदाचार्याणामाशिषो वेदान्तवेद्यपरब्रह्मणः माया वा संपूर्णतामनयत् ।